# किरणागम

पशुपटलः

कैलासशिखरासीनं सोमं सोमार्धशेखरम्
हरं दृष्ट्वाब्रवीत्तार्क्ष्यः स्तुतिपूर्वमिदं वचः  १

गरुडः

जयान्धकपृथुस्कन्धबन्धभेदविचक्षण
जय प्रवरवीरेशसंरुद्धपुरदाहक  २

जयाखिलसुरेशानशिरश्छेदभयानक
जय प्रथितसामर्थ्यमन्मथस्थितिनाशन  ३

जयाच्युततनुध्वंसकालकूटबलापह
जयावर्तमहाटोपसरिद्वेगविधारण  ४

जय दारुवनोद्यानमुनिपत्नीविमोहक
जय नृत्तमहारम्भक्रीडाविक्षोभदारुण  ५

जयोग्ररूपसंरम्भत्रसितत्रिदशासुर
जय क्रूरजनेन्द्रास्यदर्शितासृक्सुनिर्भर  ६

जय वीरपरिस्पन्ददक्षयज्ञविनाशन
जयाद्भुतमहालिङ्गसंस्थानबलगर्वित  ७

जय श्वेतनिमित्तोग्रमृत्युदेहनिपातन
जयाशेषसुखवासकाममोहितशैलज  ८

जयोपमन्युसंतापमोहजालतमोहर
जय पातालमूलोर्ध्वलोकालोकप्रदाहक  ९

भक्तस्य मम भीतस्य शिवज्ञानं परं वद
यदवाप्य नराः सर्वे मुक्तिमायान्ति केवलाम्  १०

एवमुक्तो हरः प्राह प्रस्फुरच्चन्द्रशेखरः
भगवान्
भद्रमेतत्त्वया पृष्टं शृणु ज्ञानं महोदयम्  ११

किरणाख्यं महातन्त्रं परामृतसुखप्रदम्
सर्वानुग्राहकं शुभ्रं पदार्थद्योतकं स्फुटम्  १२

पशुपाशपतिज्ञानविचारप्रतिपादकम्
क्रियाचर्यासमोपेतं योगभूतिभरावहम्  १३

गरुडः
यद्येवं स पशुस्तावत्कीदृशो बध्यते कथम्
मुच्यते कथमाख्याहि संदेहविनिवर्तये  १४

भगवान्
पशुर्नित्यो ह्यमूर्तोऽज्ञो निष्क्रियो निर्गुणोऽप्रभुः
व्यापी मायोदरान्तःस्थो भोगोपायविचिन्तकः  १५

तस्याशुद्धस्य सम्बन्धं समायाति शीवात्कला
तयोद्दलितचैतन्यो विद्याख्यापितगोचरः  १६

रागेन रञ्जितश्चापि प्रधानेन गुणात्मना
बुद्ध्यादिकरणानीकसंबन्धाद्बध्यते पशुः  १७

ततो नियतिसंश्लेषात्स्वर्जितेऽपि नियम्यते
कालेन कालसंख्यानकार्यभोगविमोहितः  १८

एवं तत्त्वकलाबद्धः किंचिज्ज्ञो देहसंयुतः

मायाभोगपरिष्वक्तस्तन्मयः सहजावृतः १९

ततः सुखादिकं कृत्स्नं भोगं भुङ्क्ते स्वकर्मतः
समे कर्मणि संजाते कालान्तरवशात्ततः २०

तीव्रशक्तिनिपातेन गुरुणा दीक्षितो यदा
सर्वज्ञः स शिवो यद्वत् किञ्चिज्ज्ञत्वविवर्जितः २१

शिवत्वव्यक्तिसम्पूर्णः संसारी न पुनस्तदा
एवं क्रमाद्विबद्धः सन्मुच्यते क्रमयोगतः २२

केवलः सकलः शुद्धस्त्र्यवस्थः पुरुषः स्मृतः
मलिनत्वाच्चितेर्मोक्षः प्राप्यते निर्मलाच्छिवात् २३

पशुरेवंविधः प्रोक्तः किमन्यत्परिपृच्छसि २४

इति श्रीमत्किरणाख्ये महातन्त्रे विद्यापादे पशुपटलः प्रथमः

## २ मायापटलः

गरुडः

योऽसावात्मा त्वया प्रोक्तः किंचिज्ज्ञः सर्वविच्छिवः
निमित्तमनयोर्ब्रूहि शुद्धाशुद्धस्वरूपयोः १

त्वयात्मा मलिनः प्रोक्तो निर्मलः किल शंकरः
निमित्तमनयोर्ब्रूहि शुद्धाशुद्धस्वरूपयोः २

भगवान्

अनादिमलसम्बन्धान्मलिनत्वमणोः स्थितम्
अनादिमलमुक्तत्वान्निर्मलत्वं स्थितं शिवे ३

आदिमत्वं यदा सिद्धं निमित्तं कल्प्यते तदा

ईदृग्रूपं स्मृतं ताभ्यां शुद्धाशुद्धं यथार्थतः ४

विशुद्धः स्फटिकः कस्मात्कस्मात्ताम्रं सकलिकम्
यथास्मिन्न निमित्तं हि तथा नैव शिवात्मनोः ५

गरुडः

किं निमित्तं पुनर्बद्धो बन्धेनात्मा कलादिना
स मायान्तर्गतः प्रोक्तो व्यापकश्च त्वया विभो ६

व्यापकत्वात्स सर्वत्र स्थितो मायोदरे कथम्
परस्परविरुद्धत्वात्कथमेतद्भविष्यति ७

भगवान्

मुक्त्यर्थं स पशुर्बद्धो नान्यथा सास्य जायते
यावच्छरीरसंश्लेषो न संजातो न भोगभुक् ८

मायेयं तद्वपुस्तस्य तदभावान्न निर्वृतिः
तेन तेनास्वतन्त्रत्वान्मलिनो मलिनीकृतः ९

यथा वस्त्रं सदोषत्वान्मलान्तःस्थं विशुद्ध्यति
अशुद्धः पुद्गलो बद्धो मायोदरगतोऽपि सन् १०

मायोदरं हि यत्प्रोक्तं कलाद्यवनिलक्षितम्
तस्मिन्यश्च लयः प्रोक्तः सूक्ष्मदेहविवक्षया ११

गरुडः

त्वयानादिर्मलः प्रोक्तो मायेयोऽस्यात्मनोऽपि वा
गुणस्तद्व्यतिरिक्तो वा मलो ब्रूहि किमात्मनः १२

सहजोऽणोर्मलो मायाकार्यमागमिको मलः
माया नो मोहिनी प्रोक्ता यतः कार्यात्प्रकाशिका १३

यतः स्वकार्यसंश्लेषाच्चैतन्यद्योतिकात्मनः
मलं विदार्य चिद्व्यक्तिमेकदेशे करोत्यसौ १४

स्थिता प्रकाशिका कार्यान्मोहकत्वे न संस्थिता
प्रकाशो व्यक्तिशब्देन मलशब्देन चावृतिः १५

व्यक्तिर्याणोर्मलः प्रोक्तः स्फुटं दीपान्धकारवत्
मायापि मोहिनी प्रोक्ता विषयास्वादभोगतः १६

यत्र तत्र स्थितस्यास्य स्वकर्ममलहेतुतः
मयोत्थं बन्धनं तस्य सनिमित्तं प्रवर्तते १७

अनादिमलमुक्तस्य शिवस्यापि न किं भवेत्
तस्मान्मायामलो नैव व्यतिरिक्तः सयुक्तितः १८

मायाकार्यं समस्तं स्यात्कुतोऽन्यः सहजो मलः
आत्मस्थं तत्पशुत्वं स्यात्पशुरप्यध्वमध्यगः १९

प्रोक्तो येन मतस्तेन मलस्तद्भिन्नलक्षणः
मलोऽज्ञानं पशुत्वं च तिरस्कारकरस्तमः २०

अविद्यावृतिमूर्छाश्च पर्यायास्तस्य चोदिताः
स चाविद्यादिपर्यायभेदैः सिद्धो मते मते २१

तत्सद्भावात्पशुः पश्यः शोध्यो बोध्यो मतस्त्विह
पाश्यादिवृत्तयो यास्तु तस्य भेदाः प्रकीर्तिताः २२

मले सति भवन्त्येता भोक्तृत्वं च न केवलम्
गरुडः
यद्येवं संस्थितः पाश्यो मलोऽस्य पशुसंगतः २३

आत्मनः किं न धर्मोऽसौ युक्तितः कल्प्यते मलः
भगवान्
आत्मनोऽनादिसम्बन्धाद्धर्म इत्युपचर्यते २४

कथं तज्ज्ञानयुक्तत्वादज्ञानगुणतां गतः
तस्य धर्मो न धर्मत्वे परिणामः स्फुटो भवेत् २५

चिद्धर्मे पुंसि नो धर्मो यदि स्यात्परिणामवान्
एकस्मिन्पूर्यते ज्ञानमन्यस्मिन्तत्तिरोहितम् २६

परिणामोऽचितः प्रोक्तश्चेतनस्य न युज्यते
गरुडः
तयोश्चानादिसम्बन्धाद्विश्लेषो न विभुत्वतः २७

सहजप्रलये प्राप्ते तस्य नाशो भवेन्न किम्
भगवान्
विभोरपि मलस्यास्य तच्छक्तेः क्रियते वधः २८

उपायाच्छक्तिसंरोधः कथंचित्क्रियते मले
यथाग्नेर्दहिका शक्तिर्मन्त्रैरशु निरुद्ध्यते २९

तद्वत्तच्छक्तिसंरोधाद्विश्लिष्ट इति कथ्यते
तं कृत्वा शक्तिसंरोधं क्रियते भवनिस्पृहः ३०

सहजा कालिका ताम्रे तत्क्षयान्न च तत्क्षयः
यद्वत्ताम्रे क्षयस्तद्वत्पुरुषस्य मलक्षयः ३१

यथा तण्डुलकम्बूके प्रक्षीणेऽपि न तत्क्षयः
विषसम्बन्धिनी शक्तिर्यथा मन्त्रैर्निरुद्ध्यते ३२

तथा न तद्विषं क्षीणमेवं पुंसो मलक्षयः

फलं कतकवृक्षस्य प्रक्षिप्तं कलुषे जले ३३

कुरुते शक्तिसंरोधं किं क्षिपत्यन्यतो जलात्
शिवज्ञानं तथा तस्य शक्तिसंरोधकारकम् ३४

सोऽपि भोक्तृत्वभावेन लक्ष्यते पशुसंगतः
तदभावे न भोक्तृत्वमात्मनः प्रतिपद्यते ३५

इति श्रीमत्किरणाख्ये महातन्त्रे विद्यापादे मायापटलो द्वितीयः

## कर्मपटलः

गरुडः
भोक्तृत्वं मलतः प्रोक्तमभिलाषान्न किं भवेत्
स च रागादतो रागो वक्तव्योऽत्र मलेन किम् १

भगवान्
भोक्तृत्वं नाम यत्प्रोक्तमनादि मलकारणम्
अभिलाषस्तनौ सत्यां सा तनुः केन हेतुना २

रागोऽपि तन्निमित्तत्वात्प्रवृत्तः पुरुषस्य तु
चौर्यं हि बीजमापेक्ष्य यथा निगलबन्धनम् ३

तथा पशुत्वमापेक्ष्य रागतत्त्वं प्रवर्तते
एतस्मादस्य भोक्तृत्वं तनुर्भोगोऽन्यहेतुजः ४

पशुत्वेन हि भोक्तृत्वं मायाबन्धस्तनन्स्थितः
सुखदुःखात्मको भोगः कर्मणः संस्थितः पशोः ५

नान्यथास्य विनिर्दिष्टं भोगभोक्तृत्वबन्धनम्
गरुडः
यदेतत्कर्म देवेश प्रोक्तं भोगनिबन्धनम् ६

कर्मार्जनं तनौ सत्यां सृष्टिकाले तनुः कृता
भगवान्
यथानादिर्मलस्तस्य कर्माप्येवमनादिकम् ७

यद्यनादि न संसिद्धं वैचित्र्यं केन हेतुना
तस्मादनादिकं कर्म मायाप्येवं भवेत्तथा ८

तथानादिः शिवः कर्ता सर्वस्य जगतः स्थितः
गरुडः
शिवः कर्ता त्वया प्रोक्तः स कथं गम्यते प्रभो ९

वैकरगयादमूर्तत्वात्कर्तृत्वं युज्यते कथम्
भगवान्
यथा कालो ह्यमूर्तोऽपि दृश्यते फलसाधकः १०

एवं शिवो ह्यमूर्तोऽपि कुरुते कार्यमिच्छया
इच्छैव करणं तस्य यथा सद्योगिनो मता ११

शल्याकृष्टिकरो दृष्टो ह्यन्नहीनोऽपि कर्षकः
न दृश्यतेऽस्य व्यापारः कार्यमेव प्रतीयते १२

स्थूलं विचित्रकं कार्यं नान्यथा घटवद्भवेत्
अस्ति हेतुरतः कश्चित्कर्म चेन्न ह्यचेतनम् १३

प्रोक्तः स निष्कलः स्थूलस्तथा सकलनिष्कलः
इशः सदाशिवः शान्तः कृत्यभेदाद्विभिद्यते १४

गरुडः
निष्कलः स कथं ज्ञेयः सकलोऽपि पुमान्भवेत्
द्विधाभावगतो योऽन्यो विरुद्धः स परस्परम् १५

भगवान्

पशोः शक्तिनिपातेन मन्त्रशक्त्या च सर्वदा
निष्कलो लक्ष्यते शक्त्या सूक्ष्मविषविकारवत् १६

सकलोऽपि पुमान्नैव मायावयववर्जनात्
निर्मलत्वाच्छिवस्यात्र न कल्प्यास्त्वसिताः कलाः १७

मन्त्रात्मिकाः कलास्तस्य ते च मन्त्राः शिवात्मकाः
तैः प्रकल्प्य शरीरं स्वं शुद्धाद्धाध्यसितं महत् १८

यावदेवं न कुरुते तावन्नो गुरुपद्धतिः
कुरुतेऽनुग्रहं देही सर्वेषामेव देहिनाम् १९

यथैव योगिनः शक्तिर्ग्रहणे मोचनेऽपि हि
तद्वदेवात्र बोद्धव्यं ग्रहनं मोचनं विभोः २०

मुद्रामण्डलमन्त्रैश्च त्रिधासिद्धिविचेष्टितैः
लक्ष्यते सकलं ध्यानात्सर्वज्ञानप्रवृत्तितः २१

द्विस्वभावगतो योऽन्यो देहः प्रोक्तो न निष्कलः
बृहच्छरीरमापेक्ष्य कलाहीनमिति स्मृतम् २२

एवमीशः स्थितः सद्धाद्योगिनां योगकारणम्
योगो न लक्ष्यहीनत्वान्न नाडी न च धारणम् २३

पुंसामनुग्रहार्थं तु परोऽप्यपरतां गतः
नादबिन्दुखमन्त्राणुशक्तिबीजकलान्तगः २४

योगि यथोपकारज्ञः सर्वज्ञत्वात्फलप्रदः
इच्छानुग्रगकर्तृत्वाल्लयभोगाधिकारवान् २५

त्रिविधः कृत्यभेदेन दर्शितो नामभेदतः
ईश्वरोऽधस्तु विद्यानां पतीन्संप्रेरयत्यसौ २६

तेन प्रेरितमात्रास्ते कुर्वतेऽधस्तनं जगत्
शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः २७

यथा भूमण्डलेशेन नियुक्तः स्वयमप्रभुः
तथासौ कुरुते सर्वं तच्छक्तिप्रतिबोधितः २८

सर्वज्ञः शुद्धदेहस्तु सर्वज्ञानप्रकाशकः २९
इति श्रीमत्किरणाख्ये महातन्त्रे विद्यापादे कर्मपटलस्तृतीयः

## ४ पतिपटलः

गरुडः
शिवशक्तिप्रभावाच्च किलानन्तः प्रबुध्यति
प्रबोधिका तु सा शक्तिः सर्वगा परिपथ्यते १

अन्येषां संनिकृष्टापि बोधं सा कुरुते न किम्
योग्यानामुपकारी चेद्रागवान्स्यात् शिवस्तदा २

भगवान्
यथार्करश्मिसंपर्कात्पद्मबोधः समो न किम्
कानिचित्प्रतिबुध्यन्ति तथान्यानि न जातुचित् ३

रागद्वेषौ न चार्कस्य तथेशस्य न तौ यतः
अधिकारान्नियोगोऽस्य न नियोगं विना स्थितिः ४

तत्सामर्थ्यादनन्तस्य सर्वज्ञत्वं भवेत्खग
गरुडः
सर्वज्ञत्वं तनौ सत्यामनन्तस्य न युज्यते ५

नियतानि यतोऽक्षाणि नियतग्राहकानि च
मायात्मकं शरीरं तच्छिष्टकर्मनिमित्तकम्  ६

यदि नाम विशेषः स्यात्सुदूरश्रवणादिकम्
भगवान्
शुद्धयोनिमयं तस्य वपुरुक्तमकर्मजम्  ७

तस्यैव पाशमुक्तत्वात् ज्ञानं केन निवार्यते
तत्स्थं सर्पविषं यद्वत्तद्गतं तं न बाधते  ८

बाधतेऽनन्तमेवं न तद्गतः पाशसंचयः
छिन्ना छिन्नोद्भवा यद्वत्स्थानाश्रयवशाद्भवेत्  ९

स्थानयोगेन मन्त्रेशे हठवत्तनुधारणम्
मन्त्रशक्त्या यथा देहो धृतस्तिष्ठति सर्वदा  १०

प्राप्नोत्यभीप्षितं स्थानं कालदष्टोऽपि शक्तितः
एवं तच्छक्तिसामर्थ्यादास्ते तस्य वपुर्यतः  ११

असंस्पृष्टं मलैर्ज्ञेयं पद्मपत्रमिवाम्भसा
तन्त्रैरुपकृतः कल्यो यथा देहगतो रसः  १२

स तिष्ठति शरीरेऽस्मिन्तद्वद्बोधो महाबलः
यथा भेषजसामर्थ्यादशक्तानां परं बलम्  १३

एवं तच्छक्तिसामर्थ्यादनन्तस्य परं बलम्
तेन सामर्थ्ययोगेन योनिं संप्रेरयेत्क्षणात्  १४

गरुडः
प्रेरकोऽधस्तने मार्गे मायायाः प्रेरकेण किम्
स्वत एव विकारिण्या जगत्यस्मिन्विकारिणि  १५

जगद्योनिर्यतः प्रोक्ता तद्विकारः कलादयः
विकारात्सर्वनाशः स्याद्विकारो न जगत्कथम् १६

भगवान्

अचेतनत्वात्प्रेर्या सा पुरुषार्थेन हेतुना
स्वतो न विकृतिस्तस्मादनन्तोऽस्याः प्रचोदकः १७

वायुवेगाद्यथोदन्वानुपर्यैव विकारभाक्
अक्षोभ्यत्वात्तथा माया तद्विकारः कलादयाः १८

नाक्षुब्धा कार्यकर्त्री चेत्क्षोभोऽस्याः स्यात्तदीरणम्
सा शक्तिः प्रेरिता तेन नित्यं कार्यकरी भवेत् १९

उक्ताक्षोभ्या विभुत्वात्सा कारणं जगतः स्थिता
भावान्कलादिकान्व्याप्य स्थिता क्षोभ्या ततः स्मृता २०

तत्कार्यकरिका शक्तिः क्रियाख्या सूक्ष्मरूपिणी
स्थूलकार्यासु सूक्ष्मापि स्थिता न्यग्रोधबीजवत् २१

कारणं तेन सा ज्ञेया स्थूलस्यास्य समन्ततः
तस्मात्कला त्रुटिः संस्था बोधिनी ह्यभिलाषकृत् २२

सूक्ष्मं चातो गुणास्तेभ्यो बुद्धिर्बुद्धेरहंकृतिः
तस्मादेकादशाक्षाणि पञ्चतन्मात्रकाणि च २३

तेभ्यो भूतानि जातानि सर्वमीशः सृजत्यधः
एवं तद्भिन्नसंस्थानं शुद्धाशुद्धाङ्गसंयुतम् २४

ज्ञेयं कारणशक्त्युत्थं कार्यं बीजनिमित्तकम्
एवमेतत्समुद्दिष्टं तत्कार्यं विग्रहाश्रयम् २५

यद्यप्येतन्मिथः कार्यं विरुद्धमसितात्मकम्
तथाप्येतत्सुसंश्लिष्टमेकस्मिन्वस्तुनि स्फुटम्  २६

नरार्थं साधयेद्भिन्नं नरस्य शकताङ्गवत्
तस्मादेतदनन्तेन सृष्टं देहनिबन्धनम्  २७

न देहेन विना मुक्तिर्न भोगश्चित्क्रिया गुरुः
एतच्च कुरुते शम्भुः स्वतन्त्रत्वाद्विभुत्वतः  २८

सर्वानुग्राहकः शान्तः शक्तिपाताच्च दीक्षया  २९
इति श्रीमत्किरणाख्ये महातन्त्रे विद्यापादे पतिपटलस्तुरीयः

## ५ शक्तिपातपटलः

गरुडः
शक्तिपाताद्भवेद्दीक्षा निपातो न विभुत्वतः
शिवस्य समावेतत्वात्सर्वदैव स्थिता पशौ  १

स्थितत्वात्सर्वदा शक्तेर्भवोच्छित्तिर्न किं भवेत्
कालो वा स च कः प्रोक्तो यदि कालः शिवेन किम्  २

भगवान्
उपचारेण शब्दानां प्रवृत्तिरिह दृश्यते
यथा पुमान्विभुर्गन्ता नित्योऽप्युक्तो विनश्वरः  ३

पासच्छेदो यथा प्रोक्तो मन्त्रराड्भगवाञ्छिवः
एवं शक्तिनिपातोऽपि भाक्तः प्रोक्तः शिवागमे  ४

निपातो भयदो यद्वद्वस्तुनः सहसा भवेत्
तद्वच्छक्तिनिपातोऽपि प्रोक्तो भवभयप्रदः  ५

तस्मादन्यत्र सा चैवं तथात्मा देशिकं प्रति
गुरुर्यथाग्रतः शिष्यान्सुप्तान्दराडेन बोधयेत् ६

शिवोऽपि मोहनिद्रायां सुप्तान्शक्त्या प्रबोधयेत्
यदा स्वरूपविज्ञानं पतितेति तदोच्यते ७

तस्माद्भक्तेर्निपातस्य निपातश्छिन्नवाचकः
तन्निपातस्य तत्कालः कर्मणस्तुल्यतैव च ८

समत्वं तत्कथं गम्यं न्यूनाधिकत्रुटिः कथम्
एवं सूक्ष्मसमत्वं हि यस्मिन्काले तदैव सा ९

स्वरूपं बोधयत्याशु बोधचिह्नबलेन वै
कर्मांशो योऽधिकः पूर्वभोगदस्त्वितरः पुनः १०

समत्वे सति यो भोगः कथं तस्य प्रजायते
मिश्रं वारम्भकं कर्म समे भोगस्तदा न हि ११

वक्तव्यश्चाधिकः कश्चिदन्यथा न सुखेतरम्
अधिकन्यूनसंबन्धाद्व्याकुलत्वं न जायते १२

अधिकन्यूनशून्यत्वाच्छक्तिमात्मा स गच्छति
स पात इति मन्तव्यस्तस्य भक्तिर्विलक्षणा १३

काल एव स निष्णातः शक्तेरात्मपरिग्रहात्
अनादिकर्मसम्बन्धाच्छिवः कालमपेक्षते १४

कालश्छिद्र इति प्रोक्तस्तज्ज्ञश्च भगवाञ्छिवः
यथा कश्चिच्चले लक्ष्ये कंचित्कालमपेक्षते १५

तज्ज्ञोऽपि स शिवस्तद्वत्समकालमपेक्षते

अभावात्तत्समत्वस्य युगपन्मुक्तिरन्यथा १६

नोपायसाधनापेक्षा क्रमो यदि स नेष्यते
प्रभुरत्र शिवो ज्ञेयः प्रभुत्वं किं त्रुटेर्मतम् १७

प्रभुत्वं ज्ञस्वभावत्वादज्ञत्वान्न त्रुटिः प्रभुः
सति काले प्रभुत्वं यत्पद्मबोधे यथा रवेः १८

न च कालादृते तत्र विकासः प्रतिपद्यते
तथापि भास्करः प्रोक्तो लोकेऽस्मिन्पद्मबोधकः १९

एवं यद्यपि तुल्यत्वं कर्मणः काल एव सः
तथापि प्रभुरत्रेशः शक्तिपातस्य हेतुतः २०

एका सती बहूनां सा कथं बोधं करोति चेत्
बहूनामप्यदोषः स्याद्विभुत्वान्न निवार्यते २१

एवं शक्तिसमायोगः प्रोक्तो ह्युद्देशतो मया
गरुडः
एवं तच्छक्तिसंयोगाद्दीक्षा यदि च संस्थिता २२

दीक्षितोत्तरकालेऽपि तिरोभावः प्रदृश्यते
तिरोभावकरी शक्तिर् यदि तस्य न निर्वृतिः २३

तथा करोतु स स्वामी यथासौ नान्यथा भवेत्
भगवान्
तिरोभावगतानां सा पुरुषाणां शिवेच्छया २४

न तिरोभावकर्तृत्वादुच्यते सा तिरोहिका
तिरोभवाय पातो न यतोऽनुग्रहधर्मिणी २५

येनासन्न असौ कालस्तेनात्मानं प्रकाशयेत्
प्रकाश्य याति विद्युत्वत्सा शक्तिः पुंप्रबोधिनी २६

यदि सर्वात्मनैवायं दीक्षितोऽपि तिरोहितः
द्विविधेऽपि तिरोभावे स्थानप्राप्तिः क्वचिद्भवेत् २७

तत्र स्थितस्य तस्येह वासना सैव जायते
तद्युक्तस्य विमोक्षः स्यादात्मनो निर्विकल्पकः २८

अनेन क्रमयोगेन तिरोभावगतो भवेत्
आनर्थक्यप्रसङ्गः स्याद्यदि मुक्तिर्न सा भवेत् २९

मन्दमन्दतरशक्तिकर्मसाम्यविवक्षया
न पुनस्तादृशी शक्तिः क्षीरवत्परिणामिनी ३०

यतः शक्तिमतः शक्तिः कृत्यसंस्थानभेदगा
द्विजादिवर्णनिश्रेणी सा च मोचयति स्फुटम् ३१

इति श्रीमत्किरणाख्ये महातन्त्रे विद्यापादे शक्तिपातपटलः पञ्चमः

## ६ दीक्षाकर्मपटलः

गरुडः

सर्वानुग्राहकः प्रोक्तः शिवः परमकारणः
द्विजादयस्तु ये वर्णा न्यूनाधिकतया स्थिताः १

संस्कारोऽपि यदेवं स्यात्फलमत्र न किं भवेत्
संस्कारो वा समस्तेषां न्यूनाधिकगतिः कथम् २

भगवान्

न जातेर्न शरीरस्य संस्कारः प्राणिनो मतः
यदि जातेर्तदेकस्मिन्दीक्षितेऽखिलदीक्षणम् ३

तेन जातेर्न वक्तव्यो जडत्वान्न तनोर्मतः
सर्वानुग्रहकर्तृत्वाद्बालबालिशभोगिनाम् ४

कर्तव्योऽनुग्रहो देव स च संस्कारपूर्वकः
संस्कारेणैव मुक्तिः स्यात्प्रोक्ता तन्त्रे यदा तदा ५

क्रियाज्ञानव्रतादीनामुपायानामहेतुता
भगवान्
ये यथा संस्थितास्ताद्दर्य तथैवेशः प्रसादकृत् ६

केचिच्चात्र क्रियायोग्यास्तेषां मुक्तिस्तथैव हि
ज्ञानयोग्यास्तथा चान्ये चर्यायोग्यास्तथापरे ७

एवं येषां यथा प्रोक्तो मोक्षस्तेनेशयोजनात्
ज्ञानादीनामुपायानां दीक्षा कारणमिष्यते ८

दीक्षयैवाविमोक्षः स्यादुपायः स नियामकः
एकः कस्मादुपायो यः प्रोक्तस्तेन यदन्यथा ९

समयं चाङ्गनादीनामशक्तत्वाद्विशोधयेत्
अज्ञत्वान्न च दोषोऽस्ति ज्ञात्वा दोषो महान्भवेत् १०

तेन तेषां विमुक्तिः स्याद्भक्तियोगे शिवागमे
ये तु शक्ता न तेषां तु शोध्यास्तेषां प्रकाशयेत् ११

एवं ज्ञानादिकं सर्वं तच्छक्तस्य प्रकाशयेत्
अन्यथा स्थितिभङ्गः स्यात्स्थितिश्चोक्ता शिवागमे १२

तदभावे न किंचित्स्यात्तेनायं नियमः स्थितः
सर्वानुग्राहकत्वेन स्थित्युपायविवक्षया १३

गरुडः

पाशविश्लेषनादेव दीक्षापि क्रियते किल
विश्लेषोऽपि न दृश्येत न दृष्टत्वात्कथं वद १४

भगवान्

पाशस्तोभात्क्षयः सिद्धः संसिद्धैः सोऽपि शम्बरैः
शम्बरानामचिन्त्यत्वाद्यथा मूर्तविषक्षयः १५

नामसंकीर्तणादेव यथा कश्चित्प्रसाध्यते
दूरस्थैर्मन्त्रमुख्यैस्तु तद्वत्कर्मक्षयस्त्विह १६

गरुडः

अशेषपाशविश्लेषो यदि देव स दीक्षया
जातायामर्थनिष्पत्तौ कथं स्याद्वपुषः स्थितिः १७

भगवान्

जातायां घटनिष्पत्तौ यथा चक्रं भ्रमत्यपि
पूर्वसंस्कारसंसिद्धं तथा वपुरिदं स्थितम् १८

अनेकभविकं कर्म दग्धं बीजमिवाणुभिः
भविष्यदपि संरुद्धं येनेदं तद्धि भोगतः १९

गरुडः

पाशमुक्तस्य यच्चिह्नं स्वल्पमप्यत्र किं न तत्
दृश्यते भक्तिचिह्नेन न च चिह्नं क्वचित्स्फुटम् २०

स्फुटं यत्र क्वचिद्दृष्टं तत्रापि व्यभिचारिता
प्रागुक्तं योजनं तस्य तद्युक्त्या ग्राहपूर्वकम् २१

विभुत्वात्तस्य नो ग्राहस्तथामूर्ततयापि च
महानत्र विरोधः स्यात्कथं तद्ब्रूहि मे शिव २२

भगवान्

तच्चिह्नं वासनानिष्ठा तत्कर्मरायविकल्पनम्
तनुस्थं हि कथं चैतत्स्पन्देनाप्यनुमीयते २३

तच्चिह्नमादवन्ते च यदि तस्य सुपुष्कलम्
व्यभिचारः कथं तस्य वासनाहितचेतसः २४

वासनापि क्रियामूला सापि मन्त्रानुगा भवेत्
विभुत्वं खे यथा शब्दादमूर्तं हि विषं यथा २५

गृह्यते मन्त्रशक्त्यासौ वाच्यस्तच्छक्तिको गुणः
वाच्यवाचकयोगेन ज्ञेया मन्त्राणवः खग २६

इति श्रीमत्किरणाख्ये महातन्त्रे विद्यापादे दीक्षाकर्मपटलः षष्ठः

## ७ मन्त्रपटलः

गरुडः

मन्त्राणां किं शिवो वाच्यः शक्तिर्वाच्याणवोऽथवा
त्रयमेकत्र वाच्यं वा तन्त्रान्तरविरोधि तत १

भगवान्

शिवो निमित्तभूतस्तु शक्त्यासौ प्रेरयत्यनून्
तृतीयं वाच्यमप्यत्र न ह्येकेन विनेतरम् २

यथौदनं पचस्वेति केनाप्युक्तोऽन्य एव तत्
करोति पचनं सोऽपि काष्ठादिकरणैर्युतः ३

शिवस्य हेतुकर्तृत्वं करणत्वमथाणुषु
कारणत्वं तथा शक्तेरेवमेषामिह स्थितिः ४

यथा तन्त्रीगतं गेयं पौरुषं व्यज्यते स्फुटम्

शैवी शक्तिस्तथानुस्था व्यनक्ति सकलां क्रियाम्  ५

गरुडः

यद्येवं संस्थितः सोऽणुः शिवो वाच्यत्वमागतः
शक्तेरप्यविनाभावात्कल्पितैरणुभिश्च किम्  ६

मन्त्राणां छेदनं प्रोक्तं बन्धनं कीलनं वधः
ताडनं भेदनं तृप्तिः शोषणं निगलार्गलम्  ७

एवमेतानि चान्यानि तेन तेषां किमात्मनः
शक्तिर्नियामिका तेषामणूनामतिबोधिनी  ८

तस्मात्कस्याणवस्तादृर्य मुक्त्वा शिवपरिग्रहम्

गरुडः

सर्व एवोदिता मन्त्रा यत्कृत्यमिह कुर्वते  ९

कर्मापेक्ष्य प्रकुर्वन्ति नेति वा वद मे स्फुटम्

भगवान्

न हि तेषां निमित्तं तु निरपेक्ष्याणवो मताः  १०

ज्ञानोक्त्याप्यनुमन्तव्या दष्टदेहविधारणात्
कर्मणश्छेदकाः प्रोक्ता दीक्षासमयसंस्थिताः  ११

विषादिकृत्यकर्तारस्तेन ते निरपेक्षिणः
विधिमेकमपेक्षन्ते सम्पूर्णावयवं शिवम्  १२

गरुडः

एकस्योत्थापनं दृष्टं दष्टस्यान्यस्य नैव तत्
व्यभिचाराच्च मन्त्राणां स्थितं कर्म कथं न तत्  १३

भगवान्

मन्त्राणां नियता शक्तिर्विधानं नियतं यतः
कृत्स्नकर्मकरा येऽत्र वैकल्यान्न हि तत्फलम्  १४

सामग्रीविकलो यस्मिन्कुरुते कर्म साधकः
तत्रापि शक्तिमात्मीयां मन्त्राः प्रख्यापयन्ति हि  १५

तेन विद्यास्तु ते प्रोक्ता --- ऐरपि
सर्वज्ञा नित्यरूपास्तु इच्छारूपविधायिनः  १६

गरुडः

नित्यत्वं यदि मन्त्राणां रूपभेदः कथं स्थितः
रूपभेदो यदा तेषामनित्यत्वं प्रसज्यते  १७

भगवान्

कामदास्ते तथैवोक्ता रुचिरूपानुकारिणः
यादृशी साधकस्येच्छा तथात्मानं प्रकुर्वते  १८

या सा तेषां च चिच्छक्तिः सान्यथा नैव जायते
स्वभावोऽयं बहिर्दृष्टो मन्त्राणां नटवत्खग  १९

कृकलासो महान्यद्वद्दृष्टोऽस्ति बहुरूपधृक्
केनापि हेतुना तद्वच् न च शक्तिर्विनाशिता  २०

एवं मन्त्रास्तु वाक्येन श्रद्धेयास्ते यथोदिताः
विचरन्ति शिवेच्छातश्चोदिता निखिलेऽध्वनि  २१

गरुडः

अध्वा मार्गः समाख्यातो व्यापकत्वाच्छिवस्य न
यद्यध्वा कल्प्यते तस्य व्यापकत्वं तदा हतम्  २२

भगवान्

येयं परिणतिर्योनेर्पशूनां बन्धकारणम्
विभूतिर्मोहिनी त्याज्या तदतीतः शिवो यतः  २३

सर्वगोऽपि यथा वृक्षस्कन्धादूर्ध्वं शिखी स्थितः
दृष्टोऽत्र तद्वदेवायं शुद्धत्वादत्र वा परः  २४

गुणाधिक्यात्परः प्रोक्ते विभुत्वेऽप्युपचर्यते
पृथिव्यादीनि तत्त्वानि भोगस्थानानि देहिनाम्  २५

भुवनैः सह शोध्यानि क्रमयुक्त्या यथा तथा
एकस्माद्यत्परं स्थानं तस्मादन्यत्परात्परम्  २६

यावत्तावच्छिवस्थानं लीयतेऽयं शिवे लयः
लये न गमनं पुंसः प्रोक्तं तस्य विभुत्वतः  २७

यथा शुल्बं सुवर्णत्वं गतं तद्व्यपदिश्यते
तद्वत्प्रत्यपदिश्येत तत्सोऽपि शिवतां गतः  २८

इति श्रीमत्किरणाख्ये महातन्त्रे विद्यापादे मन्त्रपटलः सप्तमः

## ८ भुवनपटलः

गरुडः

अध्वा नः सूचितो देव न त्वयोक्तः स्फुटं मम
ब्रूहि तं येन विज्ञानं प्रक्रियातः परं भवेत्  १

भगवान्

अधः कालोऽन्तगो रुद्रो दशेशस्थानमध्यगः
पद्मश्चोर्ध्वमधोऽनन्तस्तथान्ये क्रमवर्तिनः  २

ईश्वरः पिङ्गलः कालः क्रोदेशो जलदो बलः

धनदः शंकरश्चैते रुद्रकोट्या समावृताः ३

यद्रूपो भगवान्कालस्तद्रूपा ऋद्धिसंयुताः
तद्रूपास्तीव्रतः तीक्ष्णाः कालोऽप्येवं विभूतिमान् ४

तद्गृहं कोटिसंख्यातं तज्ज्वला दशकोटयः
निरालम्बं तदूर्ध्वं तु पञ्चकोटिमितं तमः ५

तदूर्ध्वं नरका घोराः क्षीणजन्तुसमाश्रयाः
चत्वारिंशत्समधिकं शतं तेषां प्रचोदितम् ६

द्वात्रिंशत्तत्र राजानो राजराजेश्वरास्त्रयः
रौरवोऽपि रुरुश्चान्यस्तमः शीतोष्णतापनाः ७

सन्तापः कमलाख्यश्च कम्बलो नीलसूत्रकः
सूचीमुखः क्षुरश्चैव खड्गतालवणोऽपरः ८

कुम्भीपाकोऽम्बरीशश्च तप्ताङ्गारः सुदाहकृत्
तप्तलाक्षारसो यश्च त्रपुलेपः पलाशनः ९

उच्छ्वासश्च निरुच्छ्वासस्तथा युग्ममहीधरः
शाल्मली क्षुत्पीपासाख्यः क्रिमीणां निचयोऽपरः १०

लोहस्तम्भश्च विष्पूर्णो घोरो वैतरणी नदी
अवीची चोर्ध्वतः सर्वे चतुभेदगतास्त्विमे ११

अष्टभेदास्त्रयो ज्ञेयाः कुम्भीपाकश्च रौरवः
अवीची चैव पिण्डस्थं चत्वारिंशच्छतं मतम् १२

एकैकस्यान्तरं ज्ञेयं लक्षं नवतिसंख्यया
एकलक्षोच्छ्रयाः सर्वे प्राणिनां बाधनाश्रयाः १३

तेभ्यस्त्रिंशत्सहस्राणि निरालम्बं स्थितं तमः
ऊर्ध्वे च नवनवतिलक्षं कुष्माण्डमन्दिरम् १४

नवलक्षोच्छ्रितादूर्ध्वं कुष्माण्डस्तत्र तिष्ठति
दिव्यस्त्रीभिर्वृतो घोरै रुद्रैश्चातिबलोट्कतैः १५

नवलक्षान्तरं गत्वा सप्तपातालकं भवेत्
त्रिखण्डं त्रिजनाकीर्णं हाठकाधिष्ठितं भवेत् १६

आदावाभासतालाख्यं जम्बूनदमयं महत्
क्रूरा नागाः सुरास्तत्र निवसन्ति सुभोगिनः १७

शङ्कुकर्णो महानादो नमुचिश्चेति दानवाः
अनन्तः कुलिकश्चैव एलापत्रश्च भोगिनः १८

नागकन्यासमायुक्तान्निवसन्ति न दुःखिताः
विकटः शूलदन्तश्च लोहिताक्षः पलाशनः १९

प्राक्खण्डे दानवा नागा द्वितीये राक्षसाः परे
निवसन्ति जनाकीर्णा दिव्यस्त्रीभोगसंयुताः २०

दशलक्षोच्छ्रयं ज्ञेयं सहस्रदशविस्तृतम्
नवसहस्रकं तेषामन्तरालं सहस्रकम् २१

वरतालं भवेदूर्ध्वं पद्मरागधरालयम्
तत्र प्रह्लादोऽनुह्लादो वह्निजिज्वश्च दानवाः २२

असुरीभिः समायुक्ता मध्यतो नागनायकाः
वासुकिः शङ्खपालश्च धृतरष्ट्रो भुजंगमः २३

दिव्यैश्वर्ययुता व्याला भीमास्तस्मिन्सुखाः स्थिताः

विद्युन्माली तटिजिह्वो हिरण्याक्षश्च ते मताः २४

नितलं नाम पातालमिन्द्रनीलमयं ततः
शिशुपालोऽन्धकारश्च तारकाख्यश्च दानवाः २५

अत्यन्तबलभोगाढ्याः सर्वे तस्मिन्तथा स्थिताः
कम्बलश्वेतरस्तत्र पद्मश्चान्यो भुजंगमः २६

यमदंष्ट्रोग्रदंष्ट्रौ च विशालाक्षश्च भीषणः
तिष्ठन्ति भोगसम्पन्नाः स्त्रीसहस्त्रसमायुताः २७

सुभगं त्रितलं नाम ततोऽन्यं पुष्पभूमिकम्
महिषः कालपृष्टश्च दैत्यो नाम मयोऽपरः २८

कार्कोटपद्मनाभौ च घन्तानादः पलाशनः
महोदरो महाकायो महाबाहुर्बलोत्कटः २९

तत्र तिष्ठन्ति निर्दुःखा निर्द्वन्द्वा निर्भया मताः
महातलं तु यन्नाम रूप्यभूमिमयं ततः ३०

दुन्दुभिस्तारकाख्यश्च सुपर्णोऽथ बलान्वितः
धनंजयः सुमाली च भद्रो नाम हि नायकः ३१

ज्वालास्यो वामनेत्रश्च वसत्युग्रो रतिप्रियः
पातालं नाम यच्चान्यत्सर्वरत्नाञ्चितं भवेत् ३२

शङ्खोदरो बृहद्भोगो ज्वालामाली महासुरः
दुर्दर्शनो दुर्मुखश्च श्वेतभद्रो महोरगः ३३

मेघनादोऽट्टहासश्च भीमो भीमपराक्रमः
विचित्रैश्वर्यसंपन्नाः सुधान्नरससंयुताः ३४

अन्यद्रसातलं नाम सर्वेषामुपरि स्थितम्
मुक्ताफलमयी भूमिस्तस्मिन्भुवनभूषिता ३५

दीर्घिकोद्यानपुष्पाढया हेमप्राकारतोरणा
रसायनान्नस्त्रीयुक्ता सिद्धद्रव्यसमाकुला ३६

तत्रास्ते शबली बद्धो हरिणा वामनेन तु
तक्षको नागराजश्च रोहिताक्षश्च राक्षसः ३७

पातालकन्यकाश्चोर्ध्वमष्टलक्षमिताः स्थिताः
निहता दानवा यत्र पुनः प्रतियुगे युगे ३८

तास्तु तेभ्यः समाहृय स्थापिता हाथकाग्रतः
पातालकन्यकोर्ध्वे तु दशलक्षमितं तमः ३९

तस्योर्ध्वं नवलक्षैस्तु स्थितो वै हाठकेश्वरः
तद्गृहं हेमरत्नाढ्यं दिव्यस्त्रीभोगसंयुतम् ४०

तद्धयानजपयुक्ता ये तद्भोगं प्राप्नुवन्ति ते
पातालद्वारपालित्वं तच्छिवेनास्य कीर्तितम् ४१

हठाद्भिनत्ति यन्त्राणि तेनायं हाठको मतः
पूर्वोदितप्रमाणेन स्थितः पातालसंग्रहः ४२

ततोऽष्टशीतिलक्षाणि द्वे च कोटी प्रमाणतः
भूपृष्ठं सकटाहेन कोटिमानेन तत्समम् ४३

एवमेकीकृतं सर्वं पञ्चाशत्कोटयः स्थिताः
भूलोकस्तत्र विख्यातः सप्तद्वीपार्णवान्वितः ४४

जम्बूः शाकः कुशः क्रौञ्चः शाल्मली च तथा परः

गोमेदः पुष्कराख्यश्च सप्तद्वीपाः प्रकीर्तिताः ४५

क्षारः क्षीरो दधिः सर्पिरिक्षुर्मद्यपयोनिधिः
ततः स्वादूदकोदन्वान्तस्माद्द्विगुणतः स्थिताः ४६

लक्षयोजनविस्तीर्णं जम्बूद्वीपं समन्ततः
नवखण्डं च तज्ज्ञेयं मेरुमध्यं सपर्वतम् ४७

स मेरुर्हेमसम्भूतिः शरावाकृतिमस्तकः
प्रविष्टः षोडशाधस्तात्सहस्राणि सवर्तुलः ४८

उच्छ्रयेण सहस्राणामशीतिश्चतुरन्यथा
त्रिभिः सृङ्गैः समायुक्तो रुक्मकाञ्चनरत्नजैः ४९

कृष्णस्य राजतं शृङ्गं सौवर्णं ब्रह्मणो मतम्
रत्नजं शांकरं स्थानं तदधोऽमरसंस्थितिः ५०

स्थितामरवती पूर्वे पुरी चेन्द्रस्य हेमजा
तेजोवती स्थिताग्नेय्यां वह्नेः कमललोहिता ५१

वैवस्वती यमस्यापि दक्षिणेऽञ्जनसंनिभा
रक्षोवती च नैर्ऋत्यां निर्ऋतेः कृष्णलोहवत् ५२

वारुण्यां शुद्धवत्याख्या वरुणस्येन्दुसंनिभा
वायव्ये गन्धवत्याख्या वायोर्मरकतात्मिका ५३

उत्तरे सर्वरत्नाढ्या कुबेरस्य महोदया
यशोवती स्थिता शुक्ला हरस्येशानगोचरे ५४

मेरोश्चैव चतुर्दिक्षु स्थितास्त्वन्ये महानगाः
पूर्वस्मिन्मन्दरो नाम दक्षिणे गन्धमादनः ५५

विपुलः पश्चिमे ज्ञेयः सुपार्श्वश्चोत्तरे स्थितः
कदम्बो मन्दरे ज्ञेयो जम्बूः स्याद्गन्धमादने ५६

अश्वत्थो विपुले ज्ञेयः सुपार्श्वे च वटो मतः
सरांस्युपवनान्यत्र पूर्वतश्चारुणोदकम् ५७

मानसं दक्षिणे ज्ञेयं शीतोदं पश्चिमे ततः
महाह्लादमुत्तरतस्ततश्चैत्ररथं वनम् ५८

मन्दनं तु सवैभ्राजं धृतसंज्ञं क्रमात्स्थितम्
तत्र दक्षिणतो मेरोः स्थितमेतन्नगत्रयम् ५९

निषधो हेमकूटश्च हिमवानिति विश्रुतः
मेरोरुत्तरतोऽद्रीणां त्रितयं चापि संस्थितम् ६०

नीलः श्वेतो गिरिश्चैव शृङ्गवान्नाम चापरः
सहस्रद्वयविस्तीर्णाः समुद्रावधयो मताः ६१

मल्यवान्पूर्वतो मेरोर्स्थितो योजनसंख्यया
सहस्रविस्तृतस्तार्द्ध्य गन्धाख्यः पश्चिमे ततः ६२

नगान्नगान्तरं यच्च तद्देशो वर्ष उच्यते
हिमवत्सिन्धुमध्यस्थं भारतं चापवत्स्थितम् ६३

सहस्रनवसंख्यातं वर्षं किंपुरुषं पुनः
तदवाग्घेमकूटस्योत्तरतो हिमवद्गिरेः ६४

दीर्घं तच्च समाख्यातं ततस्तु हरिसंज्ञकम्
उत्तरे हेमकूटस्य दक्षिणे निषधस्य च ६५

प्राक्प्रमाणं तु तन्मेरोः भद्राश्वं पूर्वतो भवेत्

अब्धिमाल्यवतोर्मध्ये द्वात्रिंशत्कसहस्रकम्  ६६

मेरोः पश्चिमतो ज्ञेयं केतुमलं तु तादृशम्
गन्धाख्यस्य समुद्रस्य मध्ये मध्य इलावृतम्  ६७

सुमेरोश्च चतुर्दिक्षु नवसहस्रविस्तृतम्
सुमेरोः पार्श्वतोऽत्राष्टौ सहस्राणि तथा पुनः  ६८

सुमेरोरुत्तरे काम्यो नीलश्वेताद्रिमध्यगः
परं हिरण्यकं तस्माद्दीर्घं किंपुरुषं यथा  ६९

शृङ्गाद्रिश्वेतयोर्मध्ये श्वेतादूर्ध्वं हिरण्यकम्
शृङ्गाद्रेरुत्तरे ज्ञेयो जलधेर्दक्षिणे कुरुः  ७०

चन्द्रार्धवच्च तज्ज्ञेयं भारतं कीर्तितं यथा
भारतं तत्पुनर्ज्ञेयं नवखण्डयुतं ततः  ७१

इन्द्रसंज्ञः कशेरुश्च ताम्रवर्णो गभस्तिमान्
नागः सौम्यश्च गान्धर्वो वारुणश्च कुमारिका  ७२

सुदीर्घे तत्र कन्याख्ये द्वीपे वर्णचतुष्टयम्
शेषाणि म्लेच्छयुक्तानि शतपञ्चायुतं च तत्  ७३

तद्योजनसहस्राणि संलेच्छानीतराणि तु
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः  ७४

विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः
अर्वाग् हिमवतः क्षारः शतानि नव तस्य हि  ७५

अतिक्रम्य षडन्यानि द्वीपानि सुखदानि तु
अङ्गद्वीपं यमाख्यं च मलयं शङ्खसंज्ञकम्  ७६

कुमुदं वराहसंज्ञां मलये मलयाचलः
तत्पादे हेमजा लङ्का पुरी क्रूरालया मता ७७

एवं समासतः प्रोक्तं जम्बूद्वीपमिदं खग
तस्यैव लक्षमात्रस्य क्षारोदस्तत्समो भवेत् ७८

क्षारोदादिद्वगुणः क्षीरः क्षीरोदाद्दधिसंज्ञकः
दध्नश्च सर्पिसंज्ञश्च तस्माच्च द्विगुणो रसः ७९

रसात्तदिद्वगुनं मद्यं तस्मात्स्वादूदकं तथा
जम्बूद्वीपात्तथा शाकः शाकाच्च कुशसंज्ञकः ८०

कुशात्क्रौञ्चो विनिर्दिष्टः क्रौञ्चात्तच्छाल्मलीति च
तस्माद्गोमेदसंज्ञश्च गोमेदात्पुष्करं पुनः ८१

ज्ञेयं स्वादूदकं तत्र ततो भूमिर्हिरण्मयी
दशकोटिमिता ज्ञेया क्रीडार्थं स्याद्दिवौकसाम् ८२

तस्यां चाद्रिः परो ज्ञेयो लोकालोक इति श्रुतः
सहस्रदशविस्तीर्णो देशानामाश्रयो भुवि ८३

अर्वाग्लोको न लोकोर्ध्वं लोकालोकस्ततस्तु सः
तस्यापि परतो ज्ञेयो गन्धोदस्तु समुद्रात् ८४

यत्प्रमाणं तु सर्वेषां तत्प्रामाणं ततस्तमः
सप्तत्यर्धेन कोटीनां लक्षान्येकोनविंशतिः ८५

चत्वारिंशत्सहस्राणि कोटिस्थौल्यात्कटाहकम्
तिर्यङ्मेदिनीपर्यन्तं शतकोटयर्धविस्तृतम् ८६

भूर्भुवः स्वर्ध्रुवान्तं स्याल्लक्षपञ्चदशान्वितम्

पञ्चाशीतिश्च लक्षानां कोटिद्वयमहो भवेत्  ८७

कोटयष्टकं जनो ज्ञेयस्तपो द्वादशकोटिकम्
दशषट्कोटयः सत्यं तस्मादूर्ध्वं प्रतिष्ठितम्  ८८

तस्मादूर्ध्वं भवेद्ब्रह्मा कोटित्रयमितः खग
त्रिभिश्च कोटिभिर्विष्णुश्चतुर्भिश्च हरः स्थितः  ८९

ब्रह्माण्डमूर्ध्वतः कोटिः स्थौल्यत्वेन व्यवस्थितम्
एषु लोकेषु तिष्ठन्ति भास्कराद्या ग्रहाः शुभाः  ९०

निवसन्ति सुराः सिद्धा विमानस्था महौजसः
भूलोकाद्यावदण्डं तु पञ्चशत्कोटयो मताः  ९१

कालाग्निमादितः कृत्वा तद्वत्संख्योर्ध्वतः स्थिता
ब्रह्माण्डधारका रुद्राः शतसंख्या विकल्पिताः  ९२

एकैकस्मिन्दिशां भागे दशसंख्या स्थितास्त्विमे
कपालिशो ह्यजो बुद्धो वज्रदेहः प्रमर्दनः  ९३

विभूतिरव्ययः शास्ता पिनाकी त्रिदशाधिपः
इन्द्रवीर्यं समाक्रम्य संस्थिताश्च सुपूजिताः  ९४

अग्नी रुद्रो हुताशी च पिङ्गलः खादको हरः
ज्वलनो दहनो बभ्रुर्भस्मान्तकक्षयान्तकौ  ९५

अग्नेयां संस्थितास्त्वेते पूजितास्तेन रुद्रवत्
याम्यो मृत्युर्हरो धाता विधाता कर्तृसंज्ञकः  ९६

संयोक्ता च वियोक्ता च कालो धर्मपतिः स्मृतः
यमस्य बलमाक्रम्य यमेनैव सुपूजिताः  ९७

निर्ऋतिर्मरणो हन्ता क्रूरदृष्टिर्भयानकः
ऊर्ध्वशेफो विरूपाक्षो धूम्रो लोहितदंष्ट्रवान् ९८

निर्ऋतेर्बलमाक्रम्य स्थितास्तेनैव पूजिताः
बलश्चातिबलश्चैव पाशहस्तो महाबलः ९९

श्वेतश्च जयभद्रश्च दीर्घबाहुर्जलान्तकः
बडबामुखभीमौ च वरुणेन सुपूजिताः १००

शीघ्रो लघुर्वायुवेगः सूक्ष्मस्तीक्ष्णः क्षयान्तकः
पञ्चान्तकः पञ्चशिखः कपर्दी मेघवाहनः १०१

वायोः प्रियाःसदा ह्येते दशरुद्रा महाबलाः
जटामकुटधारी च नानारत्नधरोऽपरः १०२

निधीशो रूपवान्धन्यः सौम्यदेहः प्रसादकृत्
प्रकाशकोऽथ लक्ष्मीवान्प्रकाशः सोमदेवताः १०३

विद्येशो ज्ञानवान्तज्ज्ञो वेदज्ञो मातृपिङ्गलः
भूतपालो बलिर्मित्रः सर्वविद्याधिपः सुधीः १०४

दुःखहृच्च ततो रुद्र ईशमित्रा इमे दश
अनन्तः पालको वीरः कपालीशो वृषध्वजः १०५

सुधीश्चैवोग्रशर्वौ च शुभ्रो वै लोहितोऽपरः
विष्णिवशान महात्मानः सुखिनो मृत्युवर्जिताः १०६

शम्भुर्विभुर्गणाध्यक्षस्त्र्यक्षस्त्रिदशवन्दितः
संवाहश्च विवाहश्च नभो लिप्सुर्विचक्षणः १०७

एवं ते दशसंख्योक्ता रुद्रा ब्रह्माधिदेवताः

ब्रह्माण्डं समतिक्रम्य जलं दशगुणं भवेत् १०८

अमरेशं प्रभासं च नैमिशं पुष्करं तथा
आषाढिं चैव दिण्डिं च भारभूतिं च लकुलि १०९

अतिगुह्याष्टकं ह्येतज्जलावरणसंस्थितम्
तेजस्तत्त्वं तदूर्ध्वं तु तेजोरूपजनाकुलम् ११०

हरिश्चन्द्रं च श्रीशैलं जल्पमम्रातिकेश्वरम्
मध्यमं च महाकालं केदरं भैरवं तथा १११

अतिगुह्याष्टकं ह्येतत्तेजस्तत्त्वे प्रतिष्ठितम्
वायुतत्त्वं स्थितं तस्माद्दशधावृत्य तैजसम् ११२

गया तथा कुरुक्षेत्रं नाखलं नखलं तथा
विमलं चाट्टहासं च महेन्द्रं भीममष्टमम् ११३

गुह्याद्गुह्यतरं ह्येतद्वाय्वावरणमास्थितम्
तदूर्ध्वं भवति व्योम पञ्चमं रूपवर्जितम् ११४

वस्त्रपादं रुद्रकोटिमविमुक्तं महालयम्
गोकर्णं भद्रकर्णं च स्वर्णाक्षं स्थानुसंज्ञकम् ११५

पवित्राष्टकमेतद्धि व्योमतत्त्वे प्रतिष्ठितम्
दशधा तदतिक्रम्य स्यादहंकारसंज्ञकम् ११६

छगलण्डं द्विरण्डं च मकोटं मण्डलेश्वरम्
कालाञ्जरं परं चैव शङ्कुकर्णं स्थलेश्वरम् ११७

स्थूलेश्वरं च विख्यातमहंकारे प्रतिष्ठितम्
स्थान्वष्टकमिति ख्यातं तदूर्ध्वं बुद्धिसंज्ञकम् ११८

पैशाचं राक्षसं याक्षं गन्धर्वं चैन्द्रं सौम्यकम्
प्रजेशम्ब्राह्मसंज्ञं च देवयोन्यष्टकं मतम् ११९

बुद्धितत्त्वात्ततो गौणं तत्रादौ चाकृतं भवेत्
कृतं च भैरवं ब्राह्मयं वैष्णवं च कुमारकम् १२०

श्रौमं श्रीकण्ठसंज्ञं च गौणं योगाष्टकं मतम्
ततोऽव्यक्तं प्रधानं च महादेवाष्टकालयम् १२१

क्रोधेशश्चण्डसंवर्तो ज्योतिः पिङ्गलसूरकौ
पञ्चान्तकैकवीरश्च शिखेदश्च स्थितास्त्विह १२२

अव्यक्ताद्रागतत्त्वं तु शतधा व्याप्य संस्थितम्
महातेजो वामदेवो भवश्चोधव एव च १२३

एकपिङ्गेक्षनेशानौ भुवनेश्वर एव च
अङ्गुष्ठमात्रसहिता रागस्था वीर्यसंयुताः १२४

तत्रैव पुरुषो ज्ञेयः प्रधानगृहपालकः
रागतत्त्वात्तु विद्याख्यमशुद्धं पशुमोहकम् १२५

वामदेवोऽथ भीमश्च उग्रश्च भवसंज्ञकः
सर्वेशानैकवीरश्च प्रचण्डश्चेश्वरः प्रभुः १२६

उमाभर्ता ह्यजोऽनन्त एकश्चैव शिवः पुनः
विद्यातत्त्वे स्थिता ह्येते रुद्राश्चातिबलोत्कटाः १२७

ततः कालनियत्याख्यौ संपुटौ व्याप्य लक्षधा
वामो हलाहलश्चैव क्रोधनो बडबामुखः १२८

उच्छुष्मः शम्बरश्चण्डा मतङ्गो घोररूपिणः

अधस्तात्संस्थिता ह्येते तेभ्यः स्थूलगणोऽपरः १२९

वटरुद्रस्ततश्चान्यो हुलुलश्च ततोऽपरः
कालतत्त्वात्कला ज्ञेया लक्षायुतपरिच्छदा १३०

वामो ज्येष्ठश्च रुद्रश्च कालश्चैव कलस्तथा
बलविकरणश्चान्यो बलप्रमथनोऽपरः १३१

दमनः सर्वभूतानां मनश्चोन्मन एव च
विग्रहेशसमायुक्ताः कलातत्त्वे व्यवस्थिताः १३२

तदूर्ध्वं तु भवेन्माया कोटिम्व्याप्य स्थिता ह्यधः
गहनोऽसाध्यनामा च तथा हरिहरावुभौ १३३

दशेशानश्च देवेशस्त्रिगलो गोपतिः पुनः
ते ह्यधः पुटसंस्थानादूर्ध्वं क्षेमीश उच्यते १३४

ब्रह्मस्वामी च विद्येशो विश्वेशश्च शिवस्तथा
अनन्तसहिता ह्येते मायातत्त्वनिवासिनः १३५

ततो विद्या च या शुद्धा कोटययुतगता मता
अनन्तश्च तथा सूक्ष्मः शिवश्चोत्तमसंज्ञकः १३६

एकनेत्रैकरुद्रौ च त्रिमूर्तिरपरस्तथा
श्रीकण्ठश्च शिखण्डी च वामाद्या नवशक्तयः १३७

धर्माद्याश्चरणास्तत्र ततश्चेश्वरसंजकः
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च १३८

ईश्वरे तु स्थिता ह्येतास्ततस्तत्त्वं सदाशिवम्
तत्र ब्रह्माङ्गसंघातः पुनः शक्तिद्वयं भवेत् १३९

ततस्तन्निष्कलं तत्त्वं निर्गुणं निर्मलं शिवम्
अतीन्द्रियं स्थितं शुद्धं व्यापकं शून्यलक्षणम्  १४०

एवमध्वा समाख्यातः शिवान्तस्तार्क्ष्य ते मया  १४१
इति श्रीमत्किरणाख्ये महातन्त्रे विद्यापादे भुवनपटलोऽष्टमः

## ९ शिवतत्त्वपटलः

गरुडः
शिवतत्त्वं कथं शून्यं यच्छून्यं नाक्षगोचरम्
प्रत्यक्षं चाक्षविज्ञानं तदतीतं न किंचन  १

भगवान्
माया हेया शिवो ग्राह्यो ग्राहकः पुरुषः स्मृतः
मायाधर्मैः शिवः शून्यः पशुमलवियोगतः  २

नाभावाच्छून्यमित्युक्तमन्यापेक्षतयात्र तु
गृहमीशादृते यद्वत्तथासौ सात्त्विकैर्गुणैः  ३

बिन्दुर्नादस्तथा शक्तिः शून्यत्वे परिकल्पिताः
चेतसः स्थितिहेत्वर्थं पुनर्नित्ये स्थिरं भवेत्  ४

अतीन्द्रियः सुसूक्ष्मत्वात्सूक्ष्मशक्तिलयं गतः
ज्ञानशक्तिर्मता सापि तज्ज्ञानाज्ज्ञात एव सः  ५

अतीन्द्रियं च यद्वस्तु तत्राप्यनुभवो न किम्
अनुभावो मनोऽध्यक्षः प्रसिद्धः क्षुद्यथा च तृत्  ६

गरुडः
अनुभावो विकल्पार्थे विकल्पो मनसः स च
समनस्कमतो ज्ञेयममनस्कमरूपकम्  ७

अज्ञात्वा देशिकस्तत्त्वं कथं दीक्षां करोत्यसौ
ज्ञेयः सर्वात्मनैवार्थः स ज्ञेयो नैव सर्वथा ८

भगवान्
क्षुधाद्यनुभवो यत्र विकल्पस्तत्र नो भवेत्
वस्त्वाश्रयो विकल्पोऽपि तद्वस्तु घटवन्न च ९

विकल्पो मनसः सूक्ष्मः शून्यशक्तिलयं गतः
तद्गतस्त्वन्यविच्छिन्नस्तेनोक्तश्चित्तवर्जितः १०

ज्ञानं चात्मेन्द्रियश्लेषात्कर्ता त्वात्मा मनः क्रिया
शिवः साध्योऽत्र मन्तव्यो विभुरप्येकधर्मतः ११

प्रत्यक्षेण यथा वृक्षो रूपमात्राद्विगृह्यते
रसादयो गृहीता नो तथेशो ज्ञानशक्तितः १२

गृह्यते तत्त्वभावेन वस्तुभावविवर्जनात्
तद्युक्तस्य प्रभुतत्त्वं भविष्यत्युदकैलवत् १३

शून्यमेवंविधं ज्ञेयं गुरुतः शास्त्रतः स्वतः
गरुडः
शास्त्रं च स कथं वक्ति निष्कलो वाग्विवर्जितः १४

सकलो वक्ति वा तन्त्रं स्वरूपेन तदाबलः
भगवान्
निष्कलः किं न कल्पोऽसौ यद्यकल्पः कथं जगत् १५

यथा तत्कुरुते शक्त्या तथा शास्त्रं न किं प्रभुः
किं नोपदेशदातृत्वात्सकलस्तेन स शिवः १६

यद्येवं न भवेत्ताद्दर्य तदा न स्याद्गुरुक्रमः

पुंसामनुग्रहार्थं तु परोऽप्यपरतां गतः १७

बोध्यबोधकसम्बन्धाद्वक्ति तन्त्रारायनेकधा १८

इति श्रीमत्किरणाख्ये महातन्त्रे विद्यापादे शिवतत्त्वपटलो नवमः

## १० तन्त्रावतारपटलः

गरुडः

किमर्थं तानि वक्तीशः कस्मिन्काले कियन्ति वा
के ते केषाम्ब्रवित्येवं सर्वमेतद्ब्रवीहि मे १

भगवान्

तानि वक्ति स मुक्त्यर्थं न मुक्तिः साधनादृते
साधनं तत्र संसिद्धं तदर्थं तानि सोऽब्रवीत् २

सृष्ट्यनन्तरमेवेशः शिवान्सृष्ट्वा दशात्मजान्
ज्ञानमेकं विभज्याशु तेषां तत्संख्ययावदत् ३

कामिकं प्रनवाख्यस्य सुधाख्यस्य च योगजम्
दीप्ताख्यस्याप्यचिन्त्यं तु कारणाख्यस्य कारणम् ४

अजितं सुशिवाख्यस्य ईशस्यापि सुदीप्तकम्
सूक्ष्मन्तु सूक्ष्मसंज्ञस्य कालस्यापि सहस्रकम् ५

सुप्रभं यद् दशेशस्य अंशुसंज्ञस्य चांशुमत्
एवं प्राथमिकः प्रोक्तः पुनरन्यो गुरुक्रमः ६

प्रणवात्त्रिकलः प्राप कामिकं त्रिकलाद्धरः
सुधाख्याद्योगजं तन्त्रं भस्मसंज्ञस्ततः प्रभुः ७

दीप्तरुद्रादचिन्त्यं तु गोपतिश्च ततोऽम्बिका

कारणं कारणाच्छर्वस्ततः प्राप्तः प्रजापतिः ८

अजितं सुशिवात्प्राप्तमुमेशो ह्यच्युतस्ततः
ईशाद्दीप्तं त्रिमूर्तिस्तु ततः प्राप्तो हुताशनः ९

सूक्ष्मं सूक्ष्माद्भवः प्राप्तस्ततः प्राप्तः प्रभञ्जनः
कालसंज्ञात्सहस्राख्यं भीमो धर्मस्ततः खग १०

दशेशात्सुप्रभाख्यं तु विग्रहेशस्ततः शशी
अंशुमच्चांशुसंज्ञात्तु प्राप्तो ह्युग्रस्ततो रविः ११

एवमेते समाख्याताः शिवभेदा दशाद्य ते
दशाष्टसंख्यया रुद्रान्पूर्वमुत्पाद्य बुद्धिमान् १२

शिवस्तत्संख्ययैवेह पुनस्तान्बोधयेत्खग
रुद्रस्यानादिसंज्ञस्य विजयं तन्त्रमुत्तमम् १३

पारमेशं महातन्त्रं श्रीपूपस्य प्रभाषितम्
निश्वासं यद्दशार्णस्य प्रोद्गीतं नाम शूलिनः १४

मुखबिम्बं प्रशान्तस्य बिन्दोः सिद्धमतो मतम्
शिवनिष्ठस्य सन्तानं सिंहं सौम्येशचोदितम् १५

चन्द्रभासमनन्तस्य भद्रं सर्वात्मनो मतम्
निधनस्य स्वयम्भूतं वीरजं तेजसः स्मृतम् १६

रौरवं ब्रह्मणेशस्य शिवाख्यस्य च मकुटम्
इदं देवपितुः ख्यातं ललितं चालयस्य तु १७

आग्नेयं यच्च तद्व्योमनः शिवस्यापि पुनः परम्
एते जाताः सह ज्ञानैः रुद्रभेदान्पुनः शृणु १८

प्राप्तश्चानादिसंज्ञात्तु विजयं परमेश्वरः
श्रीरूपात्पारमेशं तु सम्प्राप्तो ह्युशना मुनिः १९

दशात्त्वराच्च निश्वासं संप्राप्ता शैलसंभवा
प्रोद्गीतं रुद्रसंज्ञात्तु कचाख्यो मुनिसत्तमः २०

प्रशान्तान्मुखबिम्बं तु दधीचो नाम यो मुनिः
बिन्दुसंज्ञात्तु यत्सिद्धं प्राप्तश्चरडेश्वरो गणः २१

शिवनिष्ठाच्च सन्तानं संप्राप्तः शंशपायनः
नारसिंहं तु यत्सौम्यान्नृसिंहः प्राप्तवान्महान् २२

अनन्ताच्चन्द्रभासं तु प्राप्तो देवपुरोहितः
भद्रं सर्वात्मदेवाच्च वीरभद्रो गणो महान् २३

स्वायम्भुवं तु निधनात्सम्प्राप्तः पद्मसंभवः
वीरजं तेजसः प्राप्तः प्रजारक्षणतत्परः २४

रौरवं ब्रह्मणेशात्तु संप्राप्तो नन्दिकेश्वरः
ईशानान्मकुटं प्राप्तो महादेवो बिलाश्रयः २५

किरणं देवपितृतः प्राप्तः संवर्तको मुनिः
आलयाल्ललितं प्राप्तो रुद्रो भैरवरूपवान् २६

आग्नेयं व्योमसंज्ञात्तु संप्राप्तो हुतभुक्पुनः
शिवाख्यात्स महाकालः सौरभेयं पराह्वयम् २७

तन्त्रभेदो मया प्रोक्तो द्विविधात्क्षिप्तलक्षणः
एषु भेदेषु यो भेद उपभेदः स उच्यते २८

अतिसंक्षिप्तविस्तीर्ण ऋषिदेवगणात्मकः

गरुडः

कस्मात्ख्यातोऽत्र भेदश्च भेदोऽयं चित्तभेदतः २९

पुंप्रवृत्तेरयम्भेदः श्रोतॄणां तु विभेदतः

भगवान्

भेदोऽयमुपचारेण कल्पितः स यतस्ततः ३०

फलभेदो न कल्प्योऽत्र ज्ञानभेदः प्रकल्प्यते ३१

इति श्रीमत्किरणाख्ये महातन्त्रे विद्यापादे तन्त्रावतारपटलो दशमः

## ११ मातृकोत्पत्तिपटलः

गरुडः

ज्ञानमेकं कथं भिन्नं न ज्ञातं तत्स्फुटं मया
एतद्ब्रूहि महादेव ज्ञानमूलं यतोऽखिलम् १

एकं नादात्मकं ज्ञानमोमित्येव स्थितं परम्
सा शिखा बिन्दुवक्त्रस्य गलाङ्गस्य महात्मनः २

प्रोक्तं श्रुतौ परं ब्रह्म चोदितोऽत्राक्षरालयः
स्थितोऽव्यक्तः स वाग्रूपः पुनर्भिन्नस्तु खण्डशः ३

नवखण्डयुतश्चाद्यः पुनः षोडशभिः स्वरैः
दशार्धाक्षरनिष्णाताः पञ्चखण्डा व्यवस्थिताः ४

खण्डद्वयं चतुर्वर्णं शेषं कूताख्यया स्थितम्
एवं ज्ञेयं शतार्धात्म वर्णशक्तिविभेदतः ५

मातेव मातृका सैव संख्याज्ञानादिभेदगा
तर्ककाव्येतिहासस्था सर्वं व्याप्य व्यवस्थिता ६

शिवज्ञानप्रभेदेन स्थितैका नामभेदतः
बिसिनी यद्यथा भिन्ना रुद्रभेदात्परा सती ७

तद्भेदाज्ज्ञानभेदोऽपि भाक्तः प्रोक्तोऽर्थतो नहि
गद्यपद्यादिकाव्या ये गेया देशानुगाश्च ये ८

बीजपिराडकलाकूटमन्त्रशक्तिविनिर्गता
शक्तिर्वागीश्वरी तस्य वाङ्मयं व्याप्य संस्थिता ९

विज्ञेया मातृका सैव सर्वमन्त्रालया परा
एवमस्य विभेदोऽयं ज्ञानस्योक्तो मया तव १०
इति श्रीमत्किरणाख्ये महातन्त्रे विद्यापादे मातृकोत्पत्तिपटल एकादशः

## १२ यन्त्रोद्धारपटलः

गरुडः
मातृका यदि संसिद्धा सर्वमन्त्रालया परा
विहितास्त्वीश ये मन्त्रास्तेषां मे लक्षणं वद १

समे मध्ये धराभागे सुगन्धकुसुमाकुले
क्रमाच्छक्तिं न्यसेत्तत्र नवखराडविभागशः २

शक्तिमुद्धृत्य तामेव पूज्य पुष्पैः सुगन्दिभिः
उद्धरेच्छम्बरान्पश्चादाचार्यो मन्त्रविग्रहः ३

षोडशाच्छदकं पद्मं सहस्रात्तदलं तु वा
कर्णिकायां न्यसेत्कूटं कालयुग्मान्तसंस्थितम् ४

रुद्रबीजसमायुक्तं खराडचन्द्रसमन्वितम्
न्यसेत्कूटं च तन्मध्ये भुक्तिमुक्तिफलप्रदम् ५

न्यसेत्क्रमाद्दलेष्वेव स्वरषोडशकं पुनः
क्रमादग्रारकेष्वर्णान्व्यापकं तु न्यसेत्परि ६

एतच्छक्रं यजेद्यस्तु सततं मासि मासि वा
गन्धाद्यैर्भक्तितः सोऽपि कालमुक्तः शिवं व्रजेत् ७

द्वितीयेन चतुर्थेन षष्ठद्वादशकेन तु
षोडशेन विभिन्नोऽयम्भवेत्कूटोऽङ्गपञ्चकम् ८

ह्रस्वा ब्रह्माणि विज्ञेया द्वियुक्तास्तु गणेश्वराः
त्रियुक्ता लोकपालाः स्युश्चतुर्थेऽष्ट्राणि कल्पयेत् ९

विद्येशानां शृणुष्वान्यल्लक्षणं मातृकात्मकम्
व्यापकं रेफसंयुक्तं चतुर्थस्वरसंयुतम् १०

बिन्दुयुक्तमनन्तस्य वाचकत्वेन संस्थितम्
रेफवर्णयुतं शान्तं षष्ठस्वरसमन्वितम् ११

बिन्दुदेहसमायुक्तं सूक्ष्मदेवस्य वाचकम्
मकारं विभुसंयोगाद्विसर्गाच्च शिवोत्तमः १२

शान्तवर्णान्तिमो वर्णो रेफयुक्तः सबिन्दुकः
षष्ठस्वरसमायुक्तः प्रोक्तो नेत्रैकनामनि १३

शवर्णान्तान्तिमो वर्णो रान्तान्तेन समायुतः
द्वितीयस्वरसंयुक्त एकरुद्रः सबिन्दुकः १४

भान्तान्ताधः स्थितो रान्तो द्वादशान्तेन भेदितः
बिन्दुना भूषितो मूर्ध्नि त्रिमूर्तेर्वाचको मतः १५

षष्ठस्वरयुतः शान्तः सबिन्दुः सान्ततः स्थितः

श्रीकरठ एष विख्यातस्ततः शृणु शिखरिडनः १६

लान्तान्तिमश्चतुर्थेन भूषितो बिन्दुसंयुतः
समासेन मया तार्च्य विद्येशाः परिकीर्तिताः १७

कूटमीकारसंयुक्तं बिन्दुनादविभूषितम्
गयत्री चैव सावित्री किं तु रेफविशेषणम् १८

ओंकारादिनमोन्तांश्च ज्ञात्वा मन्त्रान्प्रयोजयेत्
स्नात्वा शुद्धः पठेन्मन्त्राञ्छुचिः प्राग्भोजनात्परः १९

द्वयोरप्यन्यथा दोषो भवेदुच्छिष्टसंभवः २०

इति श्रीमत्किरणाख्ये महातन्त्रे विद्यापादे यन्त्रावतारो द्वादशः
पटलः समाप्तः
विद्यापादः समाप्तः